# ब्रह्मवैवर्तमहापुराण-विषयानुक्रमकोशः

कुलपतेः डॉ.मण्डनमिश्रस्य प्रस्तावनया समलङ्कृतः


*योजनाप्रवर्तकः सम्पादकश्च*

**डॉ.आद्याप्रसादमिश्रः**

*सह-सम्पादकाः*

**श्रीदिवाकरदीक्षितः, डॉ.प्यारेलालपाण्डेयः**

**डॉ.मनोजकुमारमिश्रः**



**सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयः**

**वाराणसी**

SARASVATĪBHAVANA-ADHYAYANAMĀLĀ
[ Vol. 47 ]

# BRAHMAVAIVARTA-MAHĀPURĀṆA-VIṢAYĀNUKRAMAKOŚAḤ

[*The Subject Index of Brahmavaivarta Mahāpurāṇa*]

*FOREWORD BY*

**DR. MANDAN MISHRA**
VICE-CHANCELLOR

*Prepared and Edited by*

**DR. ĀDYĀ PRASĀDA MIŚRA**
*Ex-Director, Research Institute*
*Sampurnanand Sanskrit University, Varanasi.*

*Sub-Editors*

**SHRI DIWAKAR DIXIT, DR. PYARELAL PANDEY**
**DR. MANOJ KUMAR MISHRA**




VARANASI
1998

*Research Publication Supervisor*—
**Director, Research Institute**
Sampurnanand Sanskrit University
Varanasi.



*Published by*—
**Dr. Harish Chandra Mani Tripathi**
**Director, Publication Department**
Sampurnanand Sanskrit University
Varanasi-221 002



*Available at*—
**Sales Department**
Sampurnanand Sanskrit University
Varanasi-221 002



**First Edition** : 500 Copies
**Price** : Rs. 300.00



*Printed at*—
**Tara Printing Works**
Kamachha, Varanasi-221 010

सरस्वतीभवन-अध्ययनमाला
[ ४७ ]

# ब्रह्मवैवर्तमहापुराण-विषयानुक्रमकोशः

*कुलपतेः डॉ. मण्डनमिश्रस्य प्रस्तावनया समलङ्कृतः*

*योजनाप्रवर्तकः सम्पादकश्च*

**डॉ. आद्याप्रसादमिश्रः**

पूर्व-निदेशकः, अनुसन्धानसंस्थानस्य
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये, वाराणसी

*सह-सम्पादकाः*

**श्रीदिवाकरदीक्षितः, डॉ. प्यारेलालपाण्डेयः
डॉ. मनोजकुमारमिश्रः**




वाराणस्याम्

२०५५ तमे वैक्रमाब्दे   १९२० तमे शकाब्दे   १९९८ तमे ख्रैस्ताब्दे

*अनुसन्धानप्रकाशनपर्यवेक्षकः —*
**निदेशकः, अनुसन्धानसंस्थानस्य**
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये
वाराणसी ।

❐

*प्रकाशकः —*
**डॉ. हरिश्चन्द्रमणित्रिपाठी**
**निदेशकः, प्रकाशनविभागस्य**
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये
वाराणसी-२२१ ००२

❐

*प्राप्तिस्थानम् —*
**विक्रय-विभागः**
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य
वाराणसी-२२१ ००२

❐

**प्रथमं संस्करणम्** : ५०० प्रतिरूपाणि
**मूल्यम्** : ३००.०० रूप्यकाणि

❐

*मुद्रकः —*
**तारा प्रिंटिंग वर्क्स**
कमच्छा, वाराणसी-२२१ ०१०

# प्रस्तावना

**''आत्मा पुराणं वेदानाम्''** इति वाक्यानुसारं पुराणानि खलु वेदानामात्मत्वेन प्रथितानि। वेदेषु वैदिकसाहित्ये च यानि यानि तत्त्वानि ऋषिभिर्दृष्टचराणि, तेषामुपबृंहणम्, व्याख्यानम्, विश्लेषणञ्च पुराणेषु दृश्यते, निभाल्यते च पुराणेषु वैदिकप्रतीकविद्यानां प्रातिनिध्यम्। सर्वथाऽपौरुषेयेण वेदवाङ्मयेन परिप्लुतानि पुराणान्यप्यपौरुषेयवन्ति भान्ति। जानन्त्येव संस्कृतवाङ्मयविमर्शका विपश्चिदपश्चिमा विद्वांसो यद् वेदेषु बीजरूपेणोप्ता ज्ञानप्ररोहाः पुराणेषु प्रतिफलिता भवन्ति। इदमपि प्रथिततरं यत् पुरा वेद एक एवाऽऽसीत्, तस्य चतुर्धा विभागो व्यासमुनिना कृतः—ऋग्यजुःसामाथर्वरूपेण। य एव मुनिर्वेदानां विभागकर्ताऽस्ति, स एवाष्टादशपुराणानां रचयिताऽपि। अत एतत् स्वाभाविकमेव यद् वेदवाङ्मयस्य ज्ञानबीजानि पुराणवाङ्मयेऽ-ङ्कुररूपेण प्ररोहन्ति स्म। तेषामष्टादशपुराणानां प्रतीकरूपेण परिगणनं लक्ष्यमाणे पद्ये साधु कृतम् —

**'मद्वयं भद्वयं चैव ब्रत्रयं वचतुष्टयम्।**
**अनापलिङ्गकूस्कानि पुराणानि पृथक् पृथक्'।।**

(देवीभागवते- १/३/२)

महतो हर्षस्य विषयोऽयं यदस्मिन् विश्वविद्यालये अनुसन्धानसंस्थानद्वारा पुराणानां विषयानुक्रमकोशनिर्माणयोजना प्रचलन्त्यस्ति। **कूर्ममहापुराण-वामनमहापुराणविषयानुक्रमकोशौ** पूर्वं तदानीन्तनानामनुसन्धानसंस्थान-निदेशकानां **डॉ. भागीरथप्रसादत्रिपाठि-'वागीशशास्त्रि'**-महोदयानां निदेशकत्वे प्राकाश्यं प्राप्तौ। साम्प्रतं **'ब्रह्मवैवर्तमहापुराणविषयानुक्रमकोशं'** विदुषां करकमलयोरुपायनीकुर्वतो मोमुद्यते मे चेतः।

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य प्रतिष्ठापनासमकालमेव विश्वविद्यालय-स्यानुसन्धानसंस्थाने पुराणविषयानुक्रमकोशनिर्माणस्य प्रक्रमो दृष्टिगोचरीभवति। विश्वविद्यालयस्यास्याद्यकुलपतीनां **डॉ. आदित्यनाथझा**महोदयानां प्रेरणया परामर्शेन च सम्मानिताचार्येण **म.म. मथुरानाथदीक्षितेन** संस्कृत-वाङ्मयविश्वकोशयोजना प्रास्तावि तत्समक्षम्। तदानीं डॉ. झामहोदयैः

स्वपितृचरणानां स्वनामधन्यानां म. म. **डॉ. गङ्गानाथझा**महोदया-नामेतज्जातीयकं पूर्वप्रक्रान्तं कोशकार्यं स्मारं स्मारं तत्स्मृतौ स्वपक्षत आर्थिकी सहायता प्रायच्छि। तदर्थं कुलपतिभिः डॉ. झामहोदयैरेका समितिरपि सङ्घटिता तदानीन्तनानामनुसन्धानसञ्चालकानां पण्डितप्रवराणां **श्रीमत्क्षेत्रेशचन्द्र-चट्टोपाध्याय**महाभागानां सभापतित्वे। तेषामेव निदेशकत्वे म. म. डॉ. मथुरानाथदीक्षितेन **'अत्रिनिर्वचनम्'** इत्याख्यं पुस्तकरत्नं सम्पादितम्, प्रकाशितञ्च विश्वविद्यालयेन।

पूर्वप्रकल्पिते तस्मिन्नेव क्रमे **'कूर्ममहापुराणविषयानुक्रमकोशः'**, **'वामनमहापुराणविषयानुक्रमकोशश्च'** प्राकाश्यं गतौ। अयं तृतीयो **'ब्रह्मवैवर्तमहापुराणविषयानुक्रमकोशः'** तदानीन्तनानुसन्धानसंस्थाननिदेश-कानां **डॉ. आद्याप्रसादमिश्र**महोदयानां निदेशकत्वे प्रकाशयितुं प्रकल्पितः, विषयगताः शब्दा अपि सङ्कलिताः, वर्णानुक्रमेण समायोजिताश्च। एतन्महत्कार्यं डॉ. मिश्रमहोदयेनानुसन्धानसंस्थानस्यानुसन्धानाधिकारि-श्रीदिवाकरदीक्षित - डॉ. प्यारेलालपाण्डेय-डॉ. मनोजकुमारमिश्राणां साहाय्येन समपादि। तदर्थं प्रकाशनस्यास्य सम्पूर्तिमङ्गलप्रसङ्गे **श्रीदिवाकरदीक्षित - डॉ. प्यारेलाल-पाण्डेय - डॉ. मनोजकुमारमिश्र**सहितेभ्यो **डॉ. आद्याप्रसादमिश्र**-महोदयेभ्यः स्वकीयं हार्दिकं साधुवादं वितरामि, प्रकाशनविभागस्य निदेशकाय **डॉ. हरिश्चन्द्रमणित्रिपाठिने,** ईक्ष्यशोधकाय **डॉ. हरिवंशकुमारपाण्डेयाय,** प्रकाशनविभागीयान्यसहयोगिभ्यस्तथा तारायन्त्रालयसञ्चालकाय **श्रीरवि-प्रकाशपण्ड्या**महोदयाय च मङ्गलवादानुपायनीकुर्वन् पुस्तकरत्नमिदं विदुषाम्, शोधकर्तॄणाम्, विमर्शकानाञ्च समक्षं प्रस्तुवन् भवानीजानिं काशीविश्वेश्वरं प्रार्थये यदियं पुराणविषयानुक्रमकोशयोजना तूर्णं सम्पूर्तिमाप्नुयादिति।

**वाराणस्याम्**
विजयदशम्याम्,
वि. सं. २०५५

**मण्डनमिश्रः**
*कुलपतिः*
*सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य*

# सम्पादकीयम्

अनुसन्धानसंस्थानेऽनुसन्धानाधिकारिपदे कार्यं कुर्वाणैः आचार्यश्रीदिवाकरदीक्षित-डॉ.प्यारेलालपाण्डेय-डॉ.मनोजकुमारमिश्रप्रभृतिभिरस्माकं विश्वविद्यालय-स्यानुसन्धानाधिकारिभिर्विद्वद्भिर्विरचितो ब्रह्मवैवर्त्तमहापुराणस्य विषयानुक्रमकोशः पुराणविषयजिज्ञासूनां विदुषां पुरत उपाहरन् प्रमोदते मे चेतः। इतः पूर्वमत्रत्यैः कार्यरतै-र्विद्वद्भिर्ग्रथितः "वामनमहापुराणविषयानुक्रमकोशः" प्रकाशितः। आशासे यदस्य प्रकाशनेन पुराणविषयावगाहने महत् सौकर्यं भविष्यतीति मे द्रढीयान् प्रत्ययः।

'ब्रह्मवैवर्त्तमहापुराणम्' कृष्णकथाप्रधानमेव पुराणमित्यवगम्यते शास्त्रतत्त्व-विद्भिर्पुराणप्रज्ञैर्विद्वद्धौरेयैरिति। भगवतः श्रीकृष्णस्य ब्रह्मत्वविवर्तानां यत्र कात्स्न्र्येन वर्णनं स्यात्तदेव ब्रह्मवैवर्तमहापुराणमिति गीयते। उक्तञ्च —

**विवृतं यत्र कात्स्न्र्येन कृष्णेन यत्र शौनक।**

**ब्रह्मवैवर्तकं तेन प्रवदन्ति पुराविदः।।**

पुराणेऽस्मिन् अष्टादशसहस्रसंख्यापरमिताः श्लोकाः सन्ति।

तत्र चत्वारः खण्डाः सन्ति। तच्च यथा—ब्रह्मखण्डः, प्रकृतिखण्डः, गणेशखण्डः, कृष्णजन्मखण्डश्चेति। एषु चतुर्षु खण्डेषु ब्रह्मवैवर्त्तशब्दार्थस्याधिकः सम्बन्धो ब्रह्मखण्डेन प्रकृतिखण्डेन च सह परिलक्ष्यते। ब्रह्मवैवर्त्तस्यार्थस्तु ब्रह्मणो विवर्त्तः ब्रह्मविवर्त्त इति। यतो ब्रह्मण आद्यो विवर्त्तः प्रकृतिरिति, अतो ब्रह्मविवर्त्तशब्दस्यार्थः प्रकृतिरिति धेयम्। ब्रह्मविवर्तस्य (प्रकृतेः) विवर्ताः = परिणामाः यत्र प्रदर्श्यन्ते तत् पुराणं ब्रह्मवैवर्तम् इति। सारांशतः प्रकृतेर्विभिन्नानां विवर्त्तानां यत्र स्यात् प्रतिपादनं तदेव ब्रह्मवैवर्त्तपुराणम्। अस्य ब्रह्मवैवर्त्तमहापुराणस्य प्रकृतिखण्डे दुर्गा-लक्ष्मी-सरस्वती-सावित्री-राधेति पञ्चविवर्तानां तथा चान्येषामपि केषाञ्चिद् विवर्तानां सुविस्तृतं यथाक्रमं वर्णनमुपलक्ष्यते।

अत्र पञ्चमो विवर्तरूपो राधशब्दो 'राध्-साध् संसिद्धौ' इति धातुतो निष्पद्यते। राधेति प्राणशक्तिर्नाम। प्राणशक्त्यैव इदं विश्वं राद्धम्। अत इयं प्राणशक्तिर्राधा, प्राणेश्वरः श्रीकृष्णः, उभावेव परस्परमनुस्यूतौ स्तः। भगवतः श्रीकृष्णस्य राधापरनामा प्राणशक्तिरनेकेषु विवर्तेषु विवर्तिता सती भगवतः संयोगवियोगालिङ्गनादि-विभिन्नावस्थानां विश्वस्मिन् साधिका भवति।

भारतवर्षे प्राचीनकालतः पुराणानां पठनं पारायणं श्रवणञ्च महत्या श्रद्धया अत्यादरेण च प्रवर्तते। भारतीयजनानां हृदयेषु वेद-शास्त्र-ईश्वर-पुनर्जन्म-परलोकादिविषयेषु यो ह्यनादिः सनातनो विश्वासो दृढतमः संस्कारः समग्रा चास्तिकता, तत्सर्वं पुराणानामेव प्रभाव इत्यत्र न कश्चन मनागपि सन्दिहानो भवति। किञ्च वेदार्थज्ञानाय अपि भवति पुराणानामुपयोगः। उच्यते च—

**इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् ।**

महाभारते इतिहासशब्दस्याभिप्रायो व्याख्यातो विद्यते। तद्यथा—

**धर्मार्थकाममोक्षाणामुपदेशसमन्वितम्।**
**पूर्वहासं कथावृत्तमितिहासं पुरा विदुः।।**

पुराणशब्दस्य प्राचीन इति सामान्योऽर्थः। यत्र पुराभूतानां वार्त्तानां कथानां वा सङ्ग्रहस्तदेव पुराणम्। रूपगोस्वामिना पुरा नयतीति पुराणमिति अर्थानुबन्धिनी निरुक्तिः कृता। वायुपुराणानुसारं यद्धि पूर्वपरम्परां वर्णयति तत्पुराणम्। उक्तञ्च—

**पुरा परम्परां वक्ति पुराणं तेन वै स्मृतम्।**

(वायुपुराणे- १/२/५३)

सर्वशास्त्रापेक्षया यद्धि प्राचीनतमं तद्धि शास्त्रं पुराणम्— इति मत्स्यपुराणस्याभिप्रायः। सर्वप्रथमं ब्रह्मा पुराणं सस्मार। यथा चोक्तम्—

**पुराणं सर्वशास्त्राणां प्रथमं ब्रह्मणा स्मृतम्।**
**अनन्तरञ्च वक्त्रेभ्यो वेदास्तस्य विनिर्गताः।।**

अनेन प्रतीयते पुराणानि नित्यानीति। परम्परया तेषां पुराणानां स्मरणं चिन्तनं प्रवचनं वा भवति। ये पुराणकर्त्तारः कथ्यन्ते ते तु सङ्ग्रहकर्त्तारः सन्ति, न तु निर्मातारः। अपौरुषेयवैदिकवाङ्मये पुराणानामप्युल्लेखः कृतो विद्यते। वेदवत् तान्यपि नित्यानि प्रमाणभूतानि च सन्ति। अथर्ववेदे चोक्तम्—

**ऋचः समानि छन्दांसि पुराणं यजुषा सह।**
**उच्छिज्जज्ञिरे सर्वे दिवि देवा दिविश्रिताः।।**

(अथर्ववेदे- ११/७/२४)

अस्यायमाशयो यद् यज्ञोच्छिष्टाद् ऋग्वेदसामवेदादयः छन्दांसि पुराणानि चाविर्भूतानि। अत एव पुराणं पञ्च वेदमिति छान्दोग्योपनिषद्युक्तम्—

**भगवोऽध्येमि होवाच ऋग्वेदं यजुर्वेदं सामवेदमाथर्वणं चतुर्थमितिहासपुराणं पञ्चमं वेदानां वेदम्।**

बृहदारण्यके उपनिषदित्युक्तं यत्खलु परमात्मनो निःश्वासाच्चत्वारो वेदाः, इतिहास-पुराणविद्या उपनिषदश्चाविर्भूताः। यथोक्तम् —

**एवं वादेऽस्य महतो भूतस्य निःश्वसितमेतद् यद् ऋग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणं विद्या उपनिषदः।**

(बृहदा. उ. २/४/११)

शतपथब्राह्मणस्याप्ययमभिप्रायो यद् वेदादिवत् पुराणानामपि स्वाध्यायः कर्त्तव्यः। अनेन तृप्ताः सत्यो देवताः स्वाध्यायकर्त्रे तृप्तिः प्रददति। अपि चोक्तम्—

"एवं विद्वान् वाकोवाक्यमितिहासः पुराणमित्यहरहः स्वाध्यायमधीते त एव तृप्तां तर्पयन्ति सर्वैः कार्यैः सर्वभागैः"।

**वाराणसी**
वसन्तपञ्चमी, २०५४ वै.
(१.२.१९९८ खैस्ताब्दः)

**डॉ. आद्याप्रसादमिश्रः**
*निदेशकः*
*अनुसन्धानसंस्थानस्य*
*सम्पूर्णानन्दसंस्कृतविश्वविद्यालये*

# ब्रह्मवैवर्तमहापुराणविषयानुक्रमकोशः

## अ

| | | |
|---|---|---|
| **अंगहीनम्** | =अस्य व्रतादिकं फलहीनं भवति | ४/३/२७ |
| **अंगिराः** | =अस्य शापेन अग्निः सर्वभक्षो बभूव, शापकारण कथनम् | १८/४/८३ |
| **अंशः** | =ये भगवदंशाः ते कृष्णदेहान्ते पुनः स्वस्य स्थानं यास्यन्ति | ६/४/२५६ |
| | =श्रीकृष्णस्य विष्णुशंकरौ अंशौ | २२/१/२४ |
| **अंशकलाः** | =एते सूकर-वामन-कल्कि-बौद्ध-कपिल-मीनाः | ९/४/१ |
| **अंशुमान्** | =अयं दिलीपस्य पुत्रः, भगीरथस्य पिता गङ्गा नयनाय तपस्यन् मृतः | १०/२/१४ |
| **अः** | =कृष्णघटकोऽकारः श्वेतद्वीपनिवासिनो विष्णोर्वाचकः | १३/४/५७ |
| | =कृष्ण इत्यत्र 'अ' दातृवचनः | १११/४/३२ |
| **अकारः** | =कृष्णघटकोऽकारः प्राप्तिवाचकः | १३/४/६१ |
| | =कृष्णपदेऽयं दातृवचनः | १३/४/६२ |
| | =कृष्णपदान्तर्गतोऽयं दातृवचनः | १३/४/६० |
| | =कृष्णपदेऽकारोच्चारणेन मृत्युर्नश्यति | १३/४/६८ |
| | =अक्षरेष्वकारः कृष्णः | ७३/४/५५ |
| **अकीर्तिः** | =प्रतिष्ठितनामकीर्तिर्मरणादतिरिच्यते | ३४/३/७६ |
| **अक्रूरः** | =कंसस्य गणः, भगवत्प्रियः, श्रीकृष्णानयनाय गतः सगणमानयामास च मथुराम् | ५४/४/६-८ |
| | =अस्य कंसाज्ञया गोकुले कृष्णानयनायास्यगमनम्, स्वभाग्य प्रशंसनञ्च | ६५/४/१-२४ |
| **अक्रूरहर्षः** | =अस्य कृष्णदर्शनकल्पनया हर्षोत्कर्षः | ६५/११/१-३८ |

| | | |
|---|---|---|
| **अक्षताः** | =एषां दर्शनेन पुण्यलाभः | ७६/४/१५ |
| | =यात्रायां सितानामेषां दर्शनं मङ्गलम् | १६/३/२३ |
| **अक्षयवटः** | =वृन्दावने रम्यः, अस्य परिमाणादिवर्णनम् | ४/४/१४२ |
| | =अयं नर्मदातीरे पौलस्त्यस्य तपः स्थानम्, कार्तवीर्यस्य निकटेऽयम् | ३३/३/३२ |
| | =अत्र शिवस्तिष्ठति | ३८/४/२८ |
| | =अस्य दर्शनेन पुण्यलाभः | ७६/४/१२ |
| **अक्षया** | =अक्षयतृतीयायां नवम्यां च गङ्गास्नानमनन्त-फलदम् | १०/२/३५ |
| **अक्षरः** | =एष्वकारः श्रेष्ठः | ३/३/२४ |
| **अगम्यः** | =माता, सपत्नीमाता, श्वश्रूः, भगिनी, गुरुपत्नी, पुत्रपत्नी, सोदरपत्नी, सती, मातृष्वसा, पितृष्वसा, भागिनेयपत्नी, मातुलानी, नवोढा, पितृव्यस्त्री,रजस्वला, पितृमातृप्रसूः एता अष्टादशपरिपाल्याः | ७८/४/५१ |
| **अगम्यागमनम्** | =स्वप्ने इदं भार्या लाभकरः | ७७/४/१७ |
| **अगम्यागामी** | =अस्य दर्शनं पापाय | ७८/४/५१ |
| **(चतुर्वर्णस्य)** | =अयं रौरवे पतति | ७८/४/५१ |
| **अगस्त्यः** | =अयं समुद्रस्य दर्पभङ्गं चकार | ५६/४/६१ |
| | =अयं कोटिभिर्शिष्यैः सह द्वारकां गतः | १०४/४/३४ |
| **अग्निः** | =स्वाहायाः पतिः | १/२/१०१ |
| | =स्वाहा अस्य वामपार्श्वात् जाता पत्नी | ४/१/१९ |
| | =कामबाणताडितस्य रतिमवलोक्य पतितात् ब्रह्मवीर्यादस्य जन्म | ४/१/२३ |
| | =यात्रायां ज्वलदग्निदर्शनं मङ्गलम् | १६/३/२४ |
| | =अयं मृतस्य शिरोभागे देयः | २८/३/३६ |
| | =यात्रायां ज्वलदग्निदर्शनं शुभम् | ३३/३/२७ |
| | =अयं भूमौ न स्थाप्यः | ४/४/३६ |
| | =अयमंशेन द्रोणाचार्यः | ६/४/१८१ |

| | | |
|---|---|---|
| **अङ्कुरः** | =अयं जीवशक्तिसमन्वितः वृक्षाधारः आधेयश्च अष्टेः | ६/४/२१० |
| **अङ्गः** | =भारते प्रदेशः अधुना वंगप्रदेशे | १०५/४/५६ |
| **अङ्गणम्** | =इदं चन्द्रवेधयुतं कार्यम् | १०३/४/२६ |
| **अङ्गिराः** | =अयं बह्मणो मुखात् जातः | ८/१/२५ |
| | =अस्य वृहस्पतिरुतथ्यः, शम्बरश्चेति त्रयः पुत्राः | १०/१/२ |
| | =ब्रह्ममुखात् जातः, अङ्ग मुखं दूरं तेजः, निर्वचनम् | २२/१/८ |
| | =ब्रह्मणोंगजः पुत्रः सृष्टिप्रवर्तकेषु षष्ठः | ३०/४/३३ |
| | =नीतिवत्सु अयं कृष्णः | ७३/४/८२ |
| | =अस्य त्रिकोटिमिताः शिष्याः | १०४/४/३३ |
| **अचला** | =न चलेति निर्वचनम् | ९/२/३२ |
| **अजामिलः** | =स्त्रीविच्छेदापराधविमर्शनादेव वृषल्यासक्तमेनं भिया न कोऽपि वारयामास | ४६/४/५४ |
| **अञ्जनम्** | =वाणासुरस्य दिव्यास्त्रमिदम् | १२०/४/२६ |
| | =वाणप्रयुक्तस्यास्त्रस्य नाम, अस्य मार्गत्याग एव रक्षणोपायः | १२०/४/२६ |
| **अञ्जनचोरः** | =अयं शुको भवति | ८५/४/११७ |
| **अट्टालिकाकारः** | =कुलटायां शूद्रायां चित्रकाराज्जातः, पतितो जारदोषतः अस्मात्, कुम्भकारयोषिति कोटकस्य जन्म | १०/१/९६ |
| **अणिमा** | =सिद्धिषु प्रथमा द्र० लघिमा | ६/१/१८ |
| **अणुः** | =अयं परमाणुद्वयेनोत्पद्यते, अस्मात् त्रसरेणुरुत्पद्यते | ९६/४/४९ |
| **अण्डम्** | =आदिनार्या उत्पन्नम्, काले सहसा द्विधाभूत्, तस्मात् महाविराडजायत | ३/२/१-४ |
| **अतललोकः** | =सप्तपातालेषु प्रथमः, द्र० वितलम् | ७/१/६३ |
| **अतिथिः** | =अस्य भोजनात् पूर्वं भोजने कुम्भीपाके व्रजेन्नरः | २५/४/४७ |

| | | |
|---|---|---|
| | =अस्य दर्शनं पापाय | ७८/४/४६ |
| | =अयं वंखरो भवति | ८५/४/१२१ |
| **अदृश्यः** | =चन्द्रः भाद्रसितसितचतुर्थ्यामदृश्यो भवति | ७९/४/६१ |
| **अदृष्टऋतवः** | =एताः मृतं पतिं नानुगन्तुमर्हन्ति अनुगमने पतिं न प्राप्नुवन्ति | २८/३/११ |
| **अधमः** | =अयं पुरुषः परस्त्रीरतः | ३५/४/९१ |
| **अधमाकृत्या** | =दुष्टा, जारसेविका, पतिकलहकारिणी | ८४/४/३१-४१ |
| **अधरः** | =अत्र त्रिमोरागः शोभादः | ५३/४/२१ |
| **अधर्मः** | =अस्य पत्नी मिथ्या | १/२/११६ |
| | =अस्य ब्रह्मणः पृष्ठदेशाज्जन्म | ८/१/१० |
| | =वेदविरुद्धः, लक्षणम् | २४/१/८ |
| | =अस्य लक्षणम्, वेदोक्तविरुद्धत्वम् | ७९/४/१७ |
| | =विप्रः अधर्मेण अभद्राणि पश्यति | ८६/४/८४ |
| **अधर्मांशः** | =लोभादयोऽहंकारश्चेति पञ्च | ७८/४/२६ |
| **अधिक्षेपः** | =रुक्मिण्युद्वाहे कृष्णस्योपरि रुक्मिकृतम् | १०६/४/१८-२६ |
| **अधिस्थः** | =चैत्रस्य पुत्रः, सुरथस्य पिता | ६१/२/१०१-१०२ |
| **अध्यात्मयोगः** | =श्रीकृष्णेन राधां प्रति उक्तः | ६/४/२०७-२२१ |
| **अनन्तः** | =अस्य तुष्टिः पत्नी | १/२/१०६ |
| | =अयं शेषः, देवकीगर्भादाकृष्य रोहिण्यां जातः, संकर्षण इति नामान्तरम् | ६/४/१४१ |
| | =कृष्णस्य नाम | ७/४/५४ |
| | =अयं नागः, कद्रोः पुत्रः प्रथमः, द्र० वासुकिः | ९/१/३९ |
| **अनन्ता** | =अनन्तरूपत्वादिति निर्वचनम् | ९/२/३२ |
| | =अस्यान्तः नास्ति, इति निर्वचनम् | १३/४/८२ |
| | =पातालक्ष्म्याः पतिः | ५९/४/२० |
| | =नागानामयं कृष्णरूपः | ७३/४/६६ |
| | =अयं नागवाहनः | ८१/४/६ |
| | =अस्य निर्वचनम्-'नास्ति अन्तः' इति | १०४/४/६८ |

| | | |
|---|---|---|
| | =अस्य निर्वचनम्-'नास्त्यन्तः यस्य' | १११/४/२६ |
| **अनसूया** | =इयं अत्रिपत्नी दुर्वाससः माता, कमलांशा | २५/४/१५ |
| **अनरण्यः** | =अस्य भृगुपुरोहितः | ४१/४/१२२ |
| | =अयं वैष्णवः, शतं पुत्राणां एकस्याः कन्यकायाः पद्मयाश्च पिता | ४१/४/१२१-१२५ |
| | =अस्य परम्परावर्णनम् | ४१/४/११२-१२२ |
| | =अस्य मनुवंशे जन्म | ४१/४/१०३ |
| | =कश्चन नृपः, विप्राय कन्यां दत्वा ब्रह्मशापान्मुक्तः | ४१/४/९५ |
| | =अयं पद्मायाः पिता, शापभयेन कामातुरं वृद्धं पिपालादं कन्यां दत्तवान् | ४१/४/१२६ |
| **अनसूया** | =इयमपि प्रकृतेः कला, अत्रेः पत्नी | १/२/१३३ |
| **अनाग्निचिती** | =इयं प्रकृतेः कला | १/२/१३८ |
| | =इयं नग्निचितस्य पुत्री, स्वाहायाः जन्मान्तरे नाम, वाराहे कृष्णपत्नी | ४०/२/३१ |
| **अनाचारः** | =अस्य दर्शनं पापाय भवति | ७८४/४६ |
| **अनिरुद्धः** | =प्रद्युम्नात् मायावत्यां जातः, ब्रह्मणोऽवतारः | ६/४/१४० |
| | =कृष्णस्य पौत्रः, प्रद्युम्नस्य पुत्रः, विधातुरंशः | ११४/४/१ |
| | =अस्योषया विवाहप्रसंगः | ११४/४/१-९४ |
| | =शिवेनास्य शक्तिवर्णनम् | ११५/४/१५-२२ |
| | =पार्वतीकोटरी वचनानुसृत्य वाणस्य युद्धाय प्रस्थानम् | ११५/४/५२ |
| | =अयं ब्रह्मणोऽवतारः | ११७/४/१८ |
| **अनिर्वचनीयम्** | =राधिकायाः आश्रमम्, अस्य पण्डितैर्न निरूपितं व्याख्यानम् | ४/४/१५८ |
| **अनिर्वचनीयः** | =अयं भगवान् | १८/४/४० |
| **अनुद्वाही** | =द्विजःराजहंसो भवति | ८५/४/१७५ |
| **अनृतम्** | =अस्मात्परं पातकं नास्ति | ६२/४/२१, ९३/४/७७ |

| | | |
|---|---|---|
| **अभ्यासः** | =अयं शीतलकर्मणां जनकः | २१/४/११७ |
| | =अयं संसर्गसाध्यः | ४३/४/५५ |
| **अभ्युत्थानम्** | =आगतं ब्राह्मणं दृष्ट्वा ये पुरुषा इदं न कुर्वन्ति ते ब्रह्मघाती भवन्ति | ८५/४/१८२ |
| **अमङ्गलम्** | =श्रीदाम्नः शापेन राधाकृष्णयोः वर्षशतं यावद् विरहः | ६/४/२४२ |
| **अमरत्वम्** | =सिद्धिषु षोडशी, द्र० सर्वाग्यम् | ६/१/२० |
| **अमरावती** | =इयं इन्द्रस्य राजधानी, विश्वकर्मणा रचिता | ४७/४/८० |
| **अमृतम्** | =इदं भक्ष्येषु श्रेष्ठम् | ३/३/१६ |
| | =यात्रायां दक्षिणे दृष्टमिदं शुभम् | ३३/३/२३ |
| | =इदं भक्ष्यवस्तुषु कृष्णरूपः | ७३/४/६२ |
| **अम्बरीषः** | =सूर्यवंशीयः राजा, येन दुर्वासा पराभवं प्राप्तवान् | २५/४/२७ |
| | =अस्य कथा | २५/४/२७-१५८ |
| | =अस्य गृहे दुर्वाससः दर्पभंगः | ५०/४/२ |
| **अम्बष्ठः** | =वैश्यायां ब्राह्मणाज्जातः वैश्यः | १०/१/१८ |
| **अम्बा** | =द्र. प्रसूः | १०/१/१३९ |
| **अम्बिका** | =इयं राधासखी, द्र. सुशीला, मधुमती | ४/४/१८४ |
| | =दुर्गायाः नाम, निर्वचनम् द्र. वैष्णवी | ५७/२/२० |
| **अयनम्** | =वर्षे द्वयम्, दक्षिणमुत्तरं च | ९६/४/६२ |
| **अयने** | =एते द्वे एव | ७/२/७१ |
| **अयः पात्रम्** | =अस्मिन् स्थापितं पयः, गव्यं, सिद्धान्नम्, भ्रष्टान्नम्, मधु, गुडम्, नारिकेलोदकम्, फलम्, मूलम् यत् किंचित् तदभक्ष्यम् | ८५/४/४-५ |
| **अयशः** | =अयं कर्मणा घटते | २१/४/११५ |
| **अयोध्या** | =त्रैतायां रामस्य राजधानी जन्मभूमिश्च | २७/४/१५७ |
| | =सूर्यवंशीयानां राज्ञां राजधानी | ३७/३/५ |

| | | |
|---|---|---|
| | =अत्र रामनवम्यां रामदर्शनं मुक्तिदम् | ७६/४/२७ |
| **अयोनिः** | =कृष्णस्य नाम | ७/४/५४ |
| **अयोनिजा** | =राधा, तन्माता कलावती | १११/४/६१ |
| | =इयं राधा, अस्याः जन्मप्रकारः | ६/४/२२८ |
| **अयोनिसंभवा** | =और्वकन्या कन्दली, दुर्वाससः पत्नी | २४/४/११ |
| | =इयं सीता | २७/४/१५८ |
| | =राधा दुर्गा तारा सीता सुन्दरी मेना-कलावती च | ९/४/१५ |
| **अरणिः** | =अयं ब्रह्मणः नासिकारन्ध्राज्जातः | ८/१/२५ |
| | =अयं ब्रह्मपुत्रः तपसि स्थितः | १२/१/४ |
| **अरिः** | =अयं हन्ता | १११/४/४४ |
| **अरुणः** | =अयं विनतायाः पुत्रः, गरुडानुजः, पक्षिजातीनां जनकः | ९/१/४५ |
| **अरुन्धती** | =इयं प्रकृतेः कला, वसिष्ठस्य पत्नी | १/२/१३३ |
| | =इयं पितॄणां कन्या | ४१/४/३७ |
| | =इयं षोडशसतीषु अष्टमी | ४५/४/९ |
| | =इयं शिवविवाहे प्रेरिका | ४५/४/३३ |
| **अरोगी** | =स्वप्नेऽयं रोगिणं दृष्ट्वा रोगी भवति | ७७/४/७० |
| **अर्चना** | =विप्रार्चना, सर्वदेवार्चनातो प्रशस्ता | २१/४/६२ |
| **अर्जुनः** | =अयमिन्द्रांशः पाण्डवेषु | ६/४/१७९ |
| | =द्र. पार्थः | ५६/४/५८ |
| | =कार्तवीर्यार्जुनस्य दर्पभंगः परशुरामेण कृतः | ५६/४/५७ |
| | =अयं महेन्द्रपुत्रः, धर्मिष्ठः, फाल्गुनः, विजयः, अस्मै शम्भुः पाशुपतास्त्रं ददौ | ११५/४/११२ |
| | =अयं नरर्षिः कृष्णांशः | १२६/६/९५ |
| **अर्थी** | =अस्य वचनं सदा असत्यं भवति | १०५/४/४१ |
| **अर्द्धोदयः** | =अत्र स्नानेन गङ्गास्नानफलम् | १०/२/४१ |
| **अलकनन्दा** | =भूलोकगङ्गायाः नाम | १०/२/१३० |

| | | |
|---|---|---|
| | =मन्दाकिनी एव भूलोकगता, इयं लवणोदेन मिश्रिता | ३४/४/२६ |
| **अलक्ष्मी** | =ब्रह्मणः वामपार्श्वात् जाता अतिकमिनी | ८/१/१० |
| **अलावुः** | =गृहे मङ्गलप्रदा | १०३/४/४१ |
| **अवधूताः** | =एते कृष्णस्य वरयात्रायां आसन् | १०५/४/८२ |
| **अविरोधः** | =अयं सर्वमङ्गलमङ्गलप्रदम् | २८/३/३८ |
| **अवीरा** | =अस्याः दर्शनं पापाय | ७८/४/४७ |
| **अवीरान्नम्** | =इदं सुरातुल्यम्, गोमांसादिकं निषिद्धम्, चतुर्णां वर्णानामभक्ष्यम् | ८५/४/२३ |
| **अवैष्णवः** | =अस्मात् द्विजात्, वैष्णवः चण्डालः श्रेष्ठः | ११/१/३९ |
| **अव्ययः** | =कृष्णस्य नाम | ७/४/५४ |
| **अशरीरिणी वाक्** | =“देवक्या अष्टमो गर्भः, तव मृत्युहेतुः” इति कंसं बोधितवती | ७/४/१५ |
| **अशीतितमः** | =अत्राध्याये श्रीकृष्णजन्मखण्डे भाद्रपदचतुर्थ्यां चन्द्रदर्शननिषेधस्य हेतुकथनम्, चन्द्रकृतं गुरुपत्नीधर्षणकथानकम् | ८०/४/१-३८ |
| **अशुचिः** | =पतिभक्तिविहीना स्त्री | ५७/४/९ |
| | =यः मातरं पितरं विद्यादातारं मन्त्रदातारं गुरुं च न पुष्णाति स यावज्जीवनमशुचिः | ७२/४/१०९ |
| | =मत्स्यमांसं कामतः भुक्त्वा ब्राह्मणः अशुचिर्भवति | ७५/४/५३ |
| | =सर्वेषामशुचीनां जलमन्नं च न ग्राह्यम् | ८५/४/३३ |
| **अशुभं कर्म** | =इदमवैदिकम् | २५/२/७ |
| **अशुभम्** | =कृष्णभक्तानां नास्ति | ४५/३/६३ |
| | =वासुदेवभक्तानां नास्ति | ७९/४/२६ |
| **अशोकः** | =अयं शिविरे शुभः | १३/४/५२ |
| **अशोकाष्टमी** | =अत्र गङ्गास्नानफलम् | १०/२/३७ |
| **अश्वः** | =यात्रायां दृष्टः शुभः | ३३/३/१८ |
| | =अस्यास्थि शुभम् | १०३/४/५४ |

| | | |
|---|---|---|
| **अश्वत्थः** | =अयं फलिषु कृष्णरूपः | ७३/४/६५ |
| | =अस्य दर्शनेन पापनाशः | ७६/४/६-८ |
| **अश्वत्थघाती** | =अस्य दर्शनं पापाय | ७८/४/४५ |
| **अश्वत्थघ्नः** | =अयं ब्रह्महत्याया चतुर्थांशेन पापेन युज्यते, असिपत्रे नरके च पतति | ८५/४/८६ |
| **अश्वत्थामा** | =अयं शङ्करांशः | ६/४/१८१ |
| **अश्वपतिः** | =मद्रदेशस्य राजा, अस्य पत्नी मालती | २३/२/६-७ |
| | =वसिष्ठोपदेशेन सावित्रीं आरराध | २३/२/८-१३ |
| **अश्वमेधः** | =अयं कलिवर्ज्यः | ११५/४/११२ |
| **अश्वापहारी** | =अयं लालासूत्रे नरके पतति | ८५/४/१२४ |
| **अश्विनीकुमारः** | =अस्य ब्राह्मणीगमनकारणं वैद्यस्य जन्माध्ययन चरितञ्च | १०/१/१२६-१३१ |
| | =सुतपसः शापेन एषां रुग्णत्वं-यज्ञभागानधिकारित्वञ्च ससोदरस्य पूज्यत्वं वा | ११/१/८ |
| | =अयं चिकित्सासारतन्त्रस्य कर्ता | १६/१/१७ |
| | =अयं सूर्यस्य पुत्रः | ११/१/११ |
| | =सूर्यस्तोत्रेण तुष्टस्य सुतपसः वरेण अस्य नीरुजत्वं यज्ञभागत्वञ्च | ११/१/२२ |
| **अश्विनौ** | =इमौ नकुलसहदेवौ | ६/४/१८० |
| | =एतौ उर्वशीशापात् यज्ञभागविवर्जितौ अभवताम् | ६२/४/४२ |
| **अष्टचत्वारिंशः** | =अत्राध्याये श्रीकृष्णजन्मखण्डे एकदैवोदयं कृत्वा रविरस्तं जगाम, मालिसुमालिनोः शिवभक्तयोः दैत्ययोः प्रभया रात्रिश्च निवृत्तेति क्रुद्धेन सूर्येण तौ हतौ तेन कुपितेन शिवेन सूर्यस्य ब्रह्मणा रक्षणम् इति सूर्यदर्पभंगकथा | ४८/४/१-१८ |
| | =अत्राध्याये प्रकृतिखण्डे राधोपाख्यानम्, राधायाः जन्मप्रकारः, निर्वचनम्, सुदाम्नः शापात् राधायाः गोकुले जन्म | ४८/२/१-५५ |

| | | |
|---|---|---|
| **अष्टसिद्धिः** | =आसु प्राकाम्यं श्रेष्ठम् | ७३/४/८८ |
| **अष्टादशः** | =अत्राध्याये गणेशखण्डे शिवभक्तयोः मालि-सुमालेः सूर्येण कलहः, तयोः वधश्च, ततः शिवेन सूर्यवधम्, जीवदानं, सूर्यवधादर्पित-कश्यपशापेन गणेशस्य शिरच्छेदः | १८/३/१-२३ |
| | =अत्राध्याये प्रकृतिखण्डे शंखचूडेन शिवस्य युद्धम्, तयोः संवादः, शंखचूडस्य वंशानु-क्रमः, कालस्थितिवर्णनम्, ज्ञातिद्रोहस्य वर्णनम्, ब्रह्मणा उपवर्हणस्य जीवदानम् | १८/२/१-८४ |
| | =अत्राध्याये ब्रह्मखण्डे मालावतीकृतं महा-पुरुषस्तोत्रम्, कृष्णेन गन्धर्वाय जीवनदानम् | १८/१/१-४९ |
| | =अत्राध्याये श्रीकृष्णजन्मखण्डे विप्रपत्नीमोक्षः, तत्कृतं कृष्णस्तोत्रम् | १८/४/१-१८७ |
| **अष्टादशाधिक-शततमः** | =अत्राध्याये श्रीकृष्णजन्मखण्डे सगणाय शिवाय मणिभद्रदत्तेन सगणस्य कृष्णस्यागमनसूचनम्, बाणरक्षायै शिवेन पार्वतीगणेशादीनां नियोजनम्, उषानिरुद्धयोः कृष्णसमर्पणाय पार्वत्याः वचनञ्च | ११८/४/१-४० |
| **अष्टावक्रः** | =एतत्कृतं स्तोत्रम्, अस्य कृष्णचरणनिकटे मृत्युः | २९/४/५१ |
| | =अयं भगवतः परमोः भक्तः, ब्रह्मणः प्रपौत्रः | ३०/४/१११ |
| | =अयं देवलः, रम्भायाः परित्यागात् तस्या शापेन अष्टावक्रत्वं गतः | ३०/४/१०७ |
| **अष्टाविंशः** | =अत्राध्याये ब्रह्मखण्डे ब्रह्म-प्रकृति-जीवस्वरूपक-थनम्, शिवाज्ञय नारदस्य बदरिकाश्रमगमनम् | २८/१/१-७३ |
| | =अत्राध्याये गणपतिखण्डे पत्युरनुगमने रेणुकायाः भृगुणा संवादः, भृगूपदिष्टमार्गेणौर्ध्व-देहिककृत्यम्, कार्तवीर्यवधप्रतिज्ञा, तस्या पूर्तये ब्रह्मलोकगमनम्, ब्रह्मणा मन्त्रप्राप्तिः | २८/३/१-८२ |
| | =अत्राध्याये श्रीकृष्णजन्मखण्डे श्रीकृष्णेन नन्दाय दुर्गास्तोत्रराजस्योपदेशः फलश्रवणञ्च | ८८/४/१-७५ |

| | | |
|---|---|---|
| **अष्टिः** | =अयमङ्कुराधारः, अपधेयः पृथिव्याः | ६/४/२१० |
| **अष्टोत्तरशततमः** | =अत्राध्याये श्रीकृष्णजन्मखण्डे भीष्मकेण कन्यादानविधिना श्रीकृष्णाय रुक्मिणीप्रदानम् | १०८/४/१-१४ |
| **अष्टौ नायिकाः** | =एताः चण्डिकाद्याः रुद्रनायिकाः | १२०/४/१६ |
| **असत् कविः** | =अयं नकुलो भवति | ८५/४/१९१ |
| **असत्यम्** | =भिक्षुलोभिक्रोधिनर्तकवैश्यमद्यर्थिकायस्थानां वचनं सदा असत्यं भवति | १०५/४/४०-४१ |
| **असद्वंशप्रसूता** | =इयं दुःशीला भवति, अस्याः लक्षणानि | ५७/४/१३ |
| **असमञ्जः** | =अयं सगरात् शैव्यायां जातः, गङ्गानयनाय तपस्यन् मृतः, दिलीपस्य पिता | १०/२/६-१३ |
| **असिः** | =स्वप्ने दृष्टः धान्यं ददाति | ७७/४/२४ |
| **असिजीवी** | =अयं शूद्रतुल्यः, अस्यान्नं विट्समं भवति | ७५/४/६८ |
| **असितः** | =प्रचेतसः पुत्रः, देवलस्य पिता | ३०/४/३७ |
| **असितभैरवः** | =अष्टभैरवेषु चतुर्थः | ५/१/७२ |
| | =(द्र. क्रोधभैरवः) | ५/१/७२ |
| | =नवभैरवेषु तृतीयः, अयं बाणस्य सान्नाहिकः, (द्र. रुरुभैरवः) | १२०/४/१३ |
| **असिद्धिः** | =इयं दुःखवर्द्धिनी | ४१/४/१० |
| **असुराः** | =एषां सुरैः दर्पभङ्गः कृतः | २६/४/५० |
| **असूर्यपश्या** | =इयमेव शुद्धा नारी, स्वच्छन्दचारिणी शूकरीसमा भवति | १८०/४/११७ |
| **अस्ताचलः** | =अयमष्टसु ब्रह्मनिर्मितेषु पर्वतेषु षष्ठः, (द्र. सुवेलः) | ७/१/३ |
| **अस्थि** | =कुक्कुटशृगालमार्जाराणामियमशुभम्, भेटक-शूकराणां शुभप्रदम् | १०३/४/५६ |
| | =अश्वानां गजानामियं शुभम्, नर-वानर-गो-गर्दभानामशुभम् | १०३/४/५५ |
| **अस्थिमाला** | =सतीदेहास्थीनि शिवस्याङ्गभूषणम् | ४/४/२७ |

| | | |
|---|---|---|
| | =शम्भोः इयं सत्याः अस्थ्ना निर्मिता | ३८/४/१३ |
| **अहंकारः** | =अस्य महतो जन्म, अस्मात् पञ्चतन्मात्राः जाताः | ३/१/५ |
| | =अयं सर्वेषां पापानां बीजममङ्गलप्रदञ्च | ३५/४/४ |
| | =अयं अधर्मांशः | ७८/४/२६ |
| **अहंकारी** | =अयं कर्णहीनो भवति | ८५/४/१२२ |
| **अहल्या** | =इयमपि प्रकृतेः कला, गौतमस्य स्त्री | १/२/१३३ |
| | =इयं षोडशसतीषु दशमी | ४५/४/९ |
| | =तरुणाय कन्या देया इति मेनां प्रति अस्योक्तिः | ४५/४/३४ |
| | =इयं गौतमस्य पत्नी, अस्याः स्वरूपवर्णनम्, इयमिन्द्रेण छलेन भुक्ता | ४७/४/२४ |
| | =एनां गौतमशापः, शापेन स्मात्व प्राप्तिः, श्रीरामचरणस्पर्शेन शापमुक्तिः | ४७/४/३३-४४ |
| | =अस्याः शापमोचन कथा | ६२/४/५-११ |
| **अहिंसकः** | =एषु जन्तुषु कृपैवोचिता | ८५/४/८५ |

**आ**

| | | |
|---|---|---|
| **आकाशः** | =अयं व्यापकानां श्रेष्ठः | ३/३/१३ |
| **आकूतिः** | =इयं रुचेः पत्नी | ९/१/६ |
| | =इयं मनोः शतरूपायां जाता कन्या | ९/१/४ |
| **आकृतिः** | =इयं रक्ताधिके मातृतुल्या, रेतस्याधिक्ये पितृतुल्या भवति | ३६/२/१३१ |
| **आख्यानम्** | =चन्द्रसूर्यकलङ्काख्यानस्य श्रवणेन सर्वपातकनाशः | ७९/४/७ |
| **आगरी** | =करणात् राजपुत्र्यां जातः | १०/१/११० |
| **आचारहीनः** | =अयं यवनो भवति | ८५/४/१२१ |
| **आचारहीनम्** | =इदं षट् चक्रेषु विशुद्धम् | ११०/४/१० |
| | =इदं नारीणां दुर्बोधम् | ११०/४/११ |
| **आज्यम्** | =यात्रायामस्य दर्शनं मङ्गलप्रदम् | १६/३/२३ |

## इ

=अयं देवेषु श्रेष्ठः ३/३/२७

=अयं कृष्णावतारसंमये अष्टमः ६/४/३४

=अयमंशेन अर्जुनः ६/४/१७९

=अस्य एकमन्वन्तरमायुः ७/२/७४

=अयं शच्याः पतिः, जयन्तस्य पिता,
कश्यपस्य पुत्रः ९/१/१९-२०

=कश्यपाददित्यां जातः, जयन्तस्य पिता ९/१/१९-२०

=अयं ब्रह्मणः प्रपौत्रः २१/३/८

=परस्त्रीलम्पटः, भ्रष्टश्रीः, ब्रह्मणोपदिष्टेन
नारायणमन्त्रकवचस्तोत्रेण पुष्करे तुष्टस्य हरेः
वरेण पुनः संपत्तिलाभः २१/३/१-२०

=भाद्रशुक्लद्वादश्यामस्य पूजाविधिः २७/२/९६

=दुर्वाससा दत्तस्य विष्णुनैवेद्यस्य हस्तिमस्तके
त्यागात् कुपितेन दुर्वाससा प्राप्तभ्रष्टश्रीकत्व
शापः ३६/२/१५-२९

=अस्य दर्पभंगवर्णनम्, गुरोः शापस्तत्कारणम् ४७/४/५

=दर्पादयं प्रकृतिशापप्रयुक्तं गुरुशापं प्राप्तवान् ४७/४/७-१५

=अहल्यासंभोगवर्णनम्, सहस्रयोनित्व
प्राप्तिकथा ४७/४/२२-३५

=ब्रह्महत्यया पीडितोऽयं मानसकमलसूत्रे
आत्मानं जुगोप ४७/४/५६

=गुरोरपमानजेनाधर्मेणास्य ब्रह्महत्यादोषः ५९/४/६

=अस्य दर्पभञ्जनम् ६०/४/५४

=अस्य ऐश्वर्यप्रयुक्तदर्पभंजनम् ६०/४/५९, ५९/४/१

=अस्यामृतत्वप्रयुक्तो दर्पः, कृष्णेन बलिद्वारा
अस्य दर्पनाशः, अस्य कथा ६१/४/१-४

=अस्य पुनः दर्पः, तत् दुर्वाससा हृतः ६१/४/५-६

| | | |
|---|---|---|
| | =अस्य दर्पेणाहल्यायां प्रवृत्तिः, गौतमेन सहस्रभगशापेन अस्य तद्दर्पः हृतः | ६१/४/७-१० |
| | =गौतमपत्नीगमनेन गौतमशापेन च सहस्र-भगत्वम् | ६१/४/१-५७ |
| | =चतुर्दशसु इन्द्रेषु अयं कृष्णः स्वयम् | ७३/४/५६ |
| | =अस्य दर्पभंगेन गृहत्यागाभिलाषः गुरुप्रबोधनेन पुनः अयं राज्यभारं प्राप्तः | ४७/४/१५१-१६० |
| | =अस्य दर्पभंगकथा, नन्दयज्ञे कृष्णेन अस्य दर्शनम् | ४७/४/१६० |
| **इन्द्राः** | =एषां संख्या नास्ति | ४७/४/१०३ |
| | =एते असंख्याताः | ४७/४/१०४ |
| | =एकसप्ततिः युगमस्यायुः | ४७/४/१०५ |
| | =अष्टशताधिकदशलक्ष-इन्द्रपाते ब्रह्मणः पातः, अस्य कालः विष्णोः निमेषात्मकः | १२५/४/१७ |
| | =एते चतुर्दशः तेषु पञ्चेन्द्राः, इन्द्रपाते ब्रह्मणः पातः, अस्य कालः विष्णोः निमेषात्मकः | १२५/४/१७ |
| | =एते चतुर्दशः | १२५/४/२७ |
| **इन्द्रचापः** | =स्वप्ने दृष्टः प्रतिष्ठां ददाति | ७७/४/७२ |
| **इन्द्रधनुः** | =यात्राकाले दृष्टं शुभम् | ३३/३/२० |
| **इन्द्रनीलमणिः** | =अयं भूमौ न स्थाप्यः | ४/४/३४ |
| **इन्द्रमणिः** | =यात्रायां दृष्टः शुभः | ३३/३/२१ |
| **इन्द्रयागस्थलम्** | =इदं वृन्दावने द्रष्टव्यम् | ९८/४/१८ |
| **इन्द्रसावर्णिः** | =अयं मनुः, सुरेन्द्राय राज्यं दत्त्वा वनं गतः | ४१/४/११३-११४ |
| | =अयं चतुर्दशो मनुः | ४१/४/१११ |
| **इन्द्रियम्** | =एषु मनः श्रेष्ठम् | ३/३/२६ |
| **इष्टदेवी** | =षोडशमातृषु चतुर्दशी (द्र. षोडशमातरः) | ५९/४/५७ |
| **इष्टसिद्धिः** | =इयं मुदे भवति | ४१/४/१० |

## ई

| | | |
|---|---|---|
| **ईशः** | =अयं शङ्करः, श्रीकृष्णांशः | ९/४/१० |
| | =अयं सर्वेषां जनकः | २१/४/११७ |
| | =अस्य महत्त्ववर्णनम् | २१/४/११७-१२२ |
| | =अस्य त्रिविधामूर्तिः-ब्रह्मविष्णुमहेश्वराः | ४१/४/६४ |
| | =ऐश्वर्यदानात् इति निर्वचनम् | ४२/२/२५ |
| | =अयं सर्वदेहे प्रविष्टोऽपि निर्लिप्तः | ७८/४/३० |
| **ईशानः** | =अस्य पत्नी सम्पत्तिः | १/२/१०७ |
| | =श्रीकृष्णः, अयं दिक्कपालानामधीश्वरः | ५/१/७४ |
| | =कृष्णः दिगीशेषु ईशानः | ७३/४/५६ |
| | =अयं वृषभवाहनः | ८१/४/६ |
| **ईशाना** | =इयं दुर्गा, ईशानः सर्वसिद्धयर्थे, आशब्दः दात्रर्थे निर्वचनम् द्र. विष्णुमाया | ५७/२/१०, |
| **ईशाधिष्ठातृदेवता** | =इयं प्रकृतिः | ३/१/७३ |
| **ईशित्वम्** | =सिद्धिषु षष्ठी, द्र. वशित्वम् | ६/१/१८ |
| **ईश्वरः** | =सर्वेषां ब्रह्माण्डानामेकैव | ७/२/८१ |
| | =कामसहायेन बिना नायं जेयः | ३१/४/५५ |
| **ईश्वरी** | =आसु लक्ष्मी श्रेष्ठा | १३३/४/४० |

## उ

| | | |
|---|---|---|
| **उग्रसेनः** | =कंसस्य पिता | ७२/४/९५ |
| | =अस्य राज्यप्रशंसा, अयं अजय्यः | १०४/४/६६ |
| | =अस्य राज्याभिषेकवर्णनम् | १०४/४/८५-९९ |
| | =अयं वसुभ्यः, शङ्करं बिना रुद्रेभ्यः, आदित्येभ्यः, महेन्द्राच्च अजेयः | १०४/४/६९-७० |
| **उचण्डा** | =अष्टौ रुद्रनायिकासु प्रथमा (द्र. प्रचण्डा) | १२०/४/१६ |
| **उच्चैःश्रवा** | =ब्रह्मस्वापहारी जन्मशतं भवति | ७५/४/३५ |

| | | |
|---|---|---|
| | =यादवेषु उद्धवः कृष्ण एव | ८३/४/९० |
| **उद्योगः** | =अस्य पत्नी क्रिया | १/२/११५ |
| **उद्वाहः** | =अत्र कन्यायाः ज्ञातयः जामात्रे त्रैलोक्यमोहिनी नवसंगमयोग्या योषितगणः ददति | ७/४/१०-१५ |
| | =कलौ मन्त्रपूतो न भविष्यति | ९०/४/३५ |
| **उन्मत्तभैरवः** | =बाणस्य सान्नाहिकेषु प्रथमः (द्र. संहारभैरवः) | १२०/४/१३ |
| **उपचाराः** | =षोडशोपचाराणां नामानि यथा-आसनं, वसनं, पाद्यं, मधुपर्कं, अर्घ्यं, आचमनीयम्, स्नानीयम्, शयनम् गन्धम्, पुष्पम्, ताम्बूलम्, अनुलेपनम्, धूपं, दीपं, भूषणञ्च | ८/४/१२-१३ |
| **उपनयनम्** | =कृष्णस्योपनयनवर्णनम्, तत्र गणेशादिदेव-पूजनम्, | ९९/४/७-५८ |
| | =अत्र देवैः कृता कृष्णस्तुतिः | १००/४/१-३४ |
| **उपद्वीपाः** | =एते सप्त | ७/१/६ |
| | =अष्टादशः | ५३/२/१० |
| **उपपतिः** | =अयं जारः, दुष्टायाः सम्भोक्ता | १०/१/१६६ |
| **उपपुराणम्** | =अस्य लक्षणं पुराणलक्षणतुल्यम् | १३३/४/७ |
| **उपपुराणानि** | =अष्टादशः, तेषां नामानि पञ्चकं पाञ्चरात्रम्, वासिष्ठं, नारदीयं, कापिलं, गौतमीयकं सनत्कुमारीयम् संहिता पञ्चकम् भारतं रामायणञ्चेति अष्टादशः | १३३/४/२२-२६ |
| **उपमन्युः** | =अस्य लक्षं शिष्याः | १०४/४/४५ |
| **उपवर्हणः** | =ब्रह्मणाशप्तोनारदः गन्धर्वयोनौ गतः | ८/१/४१-४५ |
| | =अयं शंकरवरेण जातः, नारदस्य शापावतारः, वसिष्ठेनास्य नामकरणं नामार्थ-कथनं, निर्वचनञ्च | १२/१/७-४५ |
| | =अयं गन्धर्वपुंगवः पंचाशत्कामिनीपतिः, ब्रह्मणः शापात् दासीपुत्रत्वम्, ततः वैष्णवोच्छिष्ट-भोजनात् नारदत्वम् | १३/४/२४४-२४७ |

| | | |
|---|---|---|
| | =ब्रह्मसभायां रम्भां दृष्ट्वा स्खलितः ब्रह्मशापेन शूद्रत्वं ततः तपसा ब्रह्मपुत्रत्वप्राप्तिवरप्राप्तिश्च | १३/१/१-११ |
| | =अस्य जन्मकथा, चरितम्, नारदशापकथा, उपवर्हणशापकथा पुनः नारदत्वप्राप्तिकथा, अस्य पत्नी मालावती | १३/१/१ तः १६/१/८८ |
| | =ब्रह्मशापात् मृतस्यास्य पुनः मालावती शापवशात् जीवनम् | १७/१/१-७२ |
| | =अयं ब्रह्मशापेन शूद्रायां ब्रह्मवीर्येण जातः | २०/१/७ |
| | =द्र. नारदः | १३०/४/३ |
| **उपवासः** | =अत्र सकृद् हविष्यान्नभक्षणे विष्णोर्नैवेद्यभक्षणे वा न प्रत्यवायः | २७/१/१३ |
| | =भक्तस्योपवासे भगवान् न भुङ्क्ते | २५/४/१४८ |
| | =कृष्णजन्माष्टमी, रामनवमी, शिवरात्रिव्रते वा असमर्थेन हविष्यान्नभोजनं कर्तव्यम् | ८५/४/१७१ |
| | =हविष्यान्नभोजनेऽसमर्थः ब्राह्मणभोजनेन पातकात् रक्षितो भवति | ८५/४/१७२ |
| **उपहाराः** | =एते षोडश यथा-आसनम्, पाद्यम्, अर्घ्यम्, स्नानीयम्, अनुलेपनम्, धूपम्, दीपम्, नैवेद्यम्, ताम्बूलम्, जलम्, वस्त्रम्, भूषणम्, पुष्पम्, गन्धम्, आचमनीयकम्, तल्पम् | १०/२/१०९-११० |
| **उपायः** | =अनेन कार्याणि सिद्ध्यन्ति | ४/४/३१ |
| **उपासकः** | =कृष्णमन्त्रोपासकः असंख्यब्रह्मणां पातेऽपि न पतति गोलोकात् | ७४/४/१९ |
| **उपेन्द्रः** | =कश्यपाददित्यां जातः, अयं वामनः | ९/१/१९ |
| | =अस्य पृथ्वी पत्नी, मंगलः पुत्रः | ९/१/२१ |
| **उमा** | =बालकस्य रोदनेऽयं शब्दः | ९/३/१७ |
| **उर्वशी** | =इयं अप्सरासु श्रेष्ठा | ५९/४/१५ |

| | | |
|---|---|---|
| | =अस्या शापेन अश्विनौ यज्ञभागविवर्जिता-वभूताम् | ६२/४/४२ |
| | =अप्सरस्सु कृष्णरूपा | ७३/४/७० |
| **उर्वरितम्** | =अवशिष्टस्य संज्ञा | ५०/२/२० |
| **उषा** | =इयमपि प्रकृते: कला, बाणस्य पुत्री | १/२/१४० |
| | =सावित्र्यां ब्रह्मणो जाता | ८/१/५ |
| | =इयं तिलोत्तमा, दुर्वासस: शापेन बाणपुत्री अनिरुद्धस्य पत्नी | २३/४/१५० |
| | =अस्या: स्वप्ने दर्शनवर्णनम् | ११४/४/१-१४ |
| | =इयं बाणकन्या | ११४/४/४३ |

## ऊ

| | | |
|---|---|---|
| **ऊनचत्वारिंश:** | =अत्राध्याये प्रकृतिखण्डे दुर्गाकवच, कार्तवीर्य-परशुरामयुद्धस्य वर्णनम् | ३९/३/१-२३ |
| | =अत्राध्याये श्रीकृष्णजन्मखण्डे शिवसौन्दर्य-वर्णनम्, नारीणां मनोविकारवर्णनम्, पार्वत्या: सौन्दर्यवर्णनम्, पार्वत्या शिवपूजनवर्णनम् नारायणतुल्यपुत्रप्राप्तिकर: वर:, कामवाह:, रतिविलाप: देवोपदेशेन रत्या कामदेहभस्मर-क्षणम्, पार्वत्या: सौन्दर्यगर्वनाशकथनम् | ३९/४/१-६५ |
| | =अत्राध्याये प्रकृतिखण्डे लक्ष्म्युपाख्याने ध्यानम्, स्तोत्रम् पूजाविधिवर्णनम् | ३९/२/१-८७ |
| **ऊनत्रिंश** | =अत्राध्याये ब्रह्मखण्डे वदरीवने नारदनारायणयो: संवाद:, तत्र कृष्णमाहात्म्यवर्णनम्, प्रकृतिमहिमा-वर्णनञ्च | २९/१/१-१६ |
| | =अत्राध्याये प्रकृतिखण्डे सावित्र्युपाख्याने यमसावित्रीसंवादे अशुभकर्मफलानि, तेषां भोगस्थानानां नरकानां च नामानि | २९/२/१-२७ |

| | | |
|---|---|---|
| | =अत्राध्याये गणेशखण्डे परशुरामस्य शिवलोक-गमनमार्गवर्णनम्, शिवलोकवर्णनम्, परशुराम-कृता शिवस्तुतिः | २९/३/१-५१ |
| | =अत्राध्याये श्रीकृष्णजन्मखण्डे अष्टावक्रस्य मुनेः मोक्षोपाख्यानम्, कृष्णपार्श्वे मृत्युः | २९/४/१-५३ |
| ऊनत्रिंशदधिक-शततमः | =अत्राध्याये श्रीकृष्णजन्मखण्डे, कृष्णेन गोकुल-जनाश्वासनम्, भाण्डीरे देवैः कृता कृष्णस्तुतिः, यादवानां नाशः, पाण्डवमोक्षः, कलिभयाद्रुदतीः पुण्यनदीः प्रति सामवचनम्, श्रीकृष्णस्य गोलोकगमनम् | १२९/४/१-१११ |
| ऊननवतितमः | =अत्राध्याये कृष्णजन्मखण्डे श्रीकृष्णकृतानन्द-प्रार्थना, व्रजवासिभिः सह गोलोकप्राप्तिकरं वरदानं च | ८९/४/१-१९ |
| ऊनपञ्चाशः | =अत्राध्याये प्रकृतिखण्डे राधोपाख्याने राधासुदाम्नोः शापः, सुदाम्नः शंखचूडत्वम्, राधाया वृषभानु-जात्वम् शतवार्षिको विरहश्च | ४९/२/१-७१ |
| ऊनपञ्चाशत्तमः | =अत्राध्याये कृष्णजन्मखण्डे भृगुशापात् रुष्टेन सूर्येण जगद्दग्धुमुद्यतेन ब्राह्मणरूपेण हरिणा सान्त्वनं दर्पभंगश्च | ४९/४/१-२३ |
| ऊनविंशः | =अत्राध्याये ब्रह्मखण्डे शिवकवचस्य, महा-पुरुषस्तोत्रपूजाविधेश्च वर्णनम्, कृष्णमन्त्रः | १९/१/१-८० |
| | =वसिष्ठोपदिष्टं कृष्णकवचम्, ब्रह्मणरावणयो-पदिष्टः शिवमन्त्रः | १९/१/१-७९ |
| | =बाणोपदिष्टं शिवकवचं शिवस्तोत्रञ्च | १९/१/१-७९ |
| | =अत्राध्याये प्रकृतिखण्डे शङ्खचूडेन देवानां युद्धम् | १९/२/१-७५ |
| | =अत्राध्याये गणेशखण्डे सूर्यव्रतस्य रोगहरत्वम्, सूर्यपूजाविधिः, मन्त्रं कवचञ्च, गुरुणोपदिष्टं स्तोत्रं ब्रह्मणाकृतम् | १९/३/१-४८ |

=अत्राध्याये श्रीकृष्णजन्मखण्डे कालिनागपरिचयः, तस्य कृष्णकृतं दमनं रक्षणं रमणके प्रेषणं च, गरुडेन वैरम्, सौभरिशापेन यमुनाह्रदस्य गरुडेन रक्षा, दावाग्निभक्षणञ्च १९/४/१-१८७

**ऊनाविंशत्याधिकशततमः** =अत्राध्याये श्रीकृष्णजन्मखण्डे पार्वतीवचनस्य शिवेनानुमोदनम्, बलेरागमनम्, तस्य शिवेन प्रशंसनम्, बलिकृतं शिवस्तोत्रम्, शिवेन अभयदानम्, स्तोत्रस्य गुरुपरम्पराकथनं फलकथनञ्च ११९/४/१-७५

**ऊनषष्टिः** =अत्राध्याये प्रकृतिखण्डे ताराया अन्वेषणाय बृहस्पतेः प्रयासः ५९/२/१-८५

**ऊनषष्टितमः** =अत्राध्याये श्रीकृष्णजन्मखण्डे इन्द्रगर्वापहरणम्, तत्र गुरुकोपः राज्यभ्रंशः, नहुषस्य इन्द्रपदलाभः, अस्य शचीं प्रति कामः, नहुषाय शच्युक्तं धर्माचरणम्, शच्याः गुरुशरणप्राप्तिः, शचीकृतं गुरुस्तोत्रम् ५९/४/१-१७६

**ऊनसप्ततितमः** =अत्राध्याये श्रीकृष्णजन्मखण्डे राधाकृष्णयोः क्रीडावर्णनम्, राधां वक्षसि कृत्वा सुप्तस्य कृष्णस्य प्रबोधाय ब्रह्मादीनामागमनम्, ब्रह्मकृता कृष्णस्तुतिः, ब्रजगमन-प्रार्थना च, राधाया विरहावस्थावर्णनम्, राधाकृष्णयोःक्रीड़ा, रत्नमालाकृष्णयोः आलापाः, कृष्णस्य व्रजगमनम् ६९/४/१-९०

**ऊनाशीतितमः** =अत्राध्याये श्रीकृष्णजन्मखण्डे जमदग्निशापेन सूर्यस्य राहुग्रस्तत्वं पापदृश्यत्वञ्च, सूर्यशापेन जमदग्न्यस्य क्षत्रपराभवञ्च, ब्रह्मणा अवधिनिर्धारणम् ७९/४/१-६२

**ऊर्वी** =हरेः ऊरौ जातेति निर्वचनम् ९/२/३०

**ऊषा** =इयं बाणकन्या, स्वप्नेऽनिरुद्धेन संगता ११४/४/३४

=अस्या अनिरुद्धेन विवाहप्रसंगवर्णनम् ११४/४/१-९४

## ऋ

| | | |
|---|---|---|
| **ऋकारः** | =कृष्णघटकः ऋकारः अनन्तवाचकः | १३/४/५६ |
| | =कृष्णपदे ऋकारेण यमकिंकराः पलायन्ते | १३/४/६८ |
| **ऋणग्रस्तः** | =अस्य दर्शनं पापाय | ७८/४/४९ |
| **ऋतवः** | =एताः षडेव | ७/२/७० |
| **ऋतुः** | =सावित्र्यां ब्रह्मणो जातः | ८/१/५ |
| | =मासद्वयेनास्योत्पत्तिः, अस्मात् वत्सरः | ९६/४/५५ |
| | =एते च वसन्तग्रीष्मवर्षाशरद्धेमन्तशीतकाश्च | ९६/४/५६ |
| | =आसु माधवः श्रेष्ठः | ३/३/० |
| **ऋषयः** | =पुण्यकव्रते आगतानामेषां नामानि | ६/३/१४-२० |
| | =एषां नामानि, अत्र पाणिनेः कात्यायनस्य च नाम | ८६/४/४-११ |
| **ऋषिः** | =नारायणः | १२६/४/९० |
| **ऋष्यशृङ्गः** | =अस्य सार्द्धं त्रिकोटिमिताः शिष्याः | १०४/४/३६ |

## ए

| | | |
|---|---|---|
| **एकः** | =एकदन्ते प्रधानार्थे | ४४/३/८८ |
| **एकचत्वारिंशः** | =अत्राध्याये प्रकृतिखण्डे स्वधोपाख्यानम्, इयं ब्रह्मणः मानसी पुत्री, पितॄणां पत्नी, स्वधायाः ध्यानम् मन्त्रः पूजाविधिः, निर्वचनम् | ४१/२/१-४८ |
| | =अत्राध्याये गणपतिखण्डे प्रतिज्ञापूरणानन्तरं परशुरामस्य शिवदर्शनाय कैलासगमनम् | ४१/३/१-३५ |
| | =अत्राध्याये श्रीकृष्णजन्मखण्डे देवप्रार्थना, शिवेन हिमवतो गृहे ब्राह्मणरूपेणागत्य निन्दनम्, वसिष्ठादिभिः हिमालयगृहे शिवस्वरूपख्यापनम्, अनरण्यवृत्तान्तप्रसंगेन सृष्टिक्रममन्वन्तरादि-वर्णनम् | ४१/४/१-१४५ |
| **एकतारम्** | =ईदृशगगनदर्शने नेत्रश्रोत्रयोः रोगागमः | ७५/४/२२-२३ |
| | =अस्य दर्शने सप्तधा नारदजपः, प्रायश्चित्तम् | ७५/४/२३ |

| | | |
|---|---|---|
| | =अत्राध्याये प्रकृतिखण्डे विष्णुना छलेन तुलस्याः पातिव्रतभंगस्य वर्णनम्, शापः, तुलस्या वृक्षत्वं तन्माहात्म्यं च, इयं गण्डकी नदीरूपेण अवतरितः, अस्याः केशाः तुलसी तरवः | २१/२/१-१०५ |
| | =अत्राध्याये गणपतिखण्डे इन्द्रस्य नारायण-साधनाजन्यप्रसादेन सम्पत्तिलाभः | २१/३/१-२० |
| | =अत्राध्याये श्रीकृष्णजन्मखण्डे इन्द्रयागभंगम्, यागस्वरूपवर्णनम्, गोवर्धनपदस्य निर्वचनम्, व्रजजनानामिन्द्रकोपेनोद्धारः, इन्द्रादि कृताः कृष्णस्तुतयः, कृष्णषडक्षरो मन्त्रस्य कथनम् | २१/४/१-२३३ |
| **एकविंशत्यधिक-शततमः** | =अत्राध्याये श्रीकृष्णजन्मखण्डे सुधर्मायां स्थिताय कृष्णाय शृगालवसुदेवस्य युद्धाह्वानम्, कृष्णस्याक्रमणम्, शृगालेन कृष्णस्य संवादः शृगालेन स्वस्य पूर्वजन्मकथनम्, शृगालेन श्रीकृष्णस्य समरः, कृष्णेन शृगालस्य वधः, पुनः शृगालस्य समुद्र-रूपेण बैकुण्ठे सप्तमद्वारपालत्व प्राप्तिः | १२१/४/१-५२ |
| **एकषष्टितमः** | =अत्राध्याये प्रकृतिखण्डे तारान्वेषणाय ब्रह्मणः शुक्रगृहे गमनम्, ताराप्राप्तिः, बुधात् चित्रायां चैत्रस्य तस्मात् अश्वरथस्य जन्म | ६१/२!१-१०८ |
| | =अत्राध्याये श्रीकृष्णजन्मखण्डे बलिद्वारा इन्द्रस्य दर्पभंगः, अहल्योपहासादिकथनपूर्वकं इन्द्रस्य दर्पहरणवृत्तकथनम् | ६१/४/१-५७ |
| **एकसप्ततितमः** | =अत्राध्याये श्रीकृष्णजन्मखण्डे श्रीकृष्णस्य मथुरायात्रायां मङ्गलवर्णनम् | ७१/४/१-२३ |
| **एकादशः** | =अत्राध्याये ब्रह्मखण्डे सुतपसः तपः तेन वरं-याचनम्, पितृणां मानसीकन्यायाः विवाहः, सुतपसः पत्न्यां अश्विभ्यां वैद्यस्य जन्म, उभयोः शापः, तस्य निवृत्तिश्च सूर्येण ब्राह्मणस्तुतिः ब्राह्मणमहिमा वर्णनम् | ११/१/१-४५ |

| | | |
|---|---|---|
| | =अत्राध्याये प्रकृतिखण्डे, गङ्गारूपमोहित श्रीकृष्णस्य राधोपालम्भः तत्रस्थानां श्रीकृष्ण-प्रेयसीनां दशावर्णनम्, गङ्गायाः राधाभयेन श्रीकृष्णपादे विलीनत्वम् | ११/२/१-१४२ |
| | =अत्राध्याये गणेशखण्डे गणेशदर्शनागत-शनैश्चरस्य अधोमुखत्वमवलोक्य पार्वत्या कारणविषये उक्तिप्रयुक्तिश्च | ११/३/१-३४ |
| | =अत्राध्याये श्रीकृष्णजन्मखण्डे, तृणावर्तवधः, तज्जन्मान्तरवृत्तकथनम् | ११/४/१-३५ |
| | =हरेः पापतनाशकानि नामानि-राम-नारायण-अनन्त-मुकुन्द-मधुसूदन-कृष्ण-केशव-कंसारि-हरिः, वैकुण्ठ-वामन इति | १११/४/१७ |
| **एकादशाक्षरो** | =कृष्णस्यायं ब्रह्मणा पूर्वं कुमाराय दत्तं तेन अंगिरसे अयं गुरवे | २१/४/१९७ |
| **एकादशी** | =इयं तिथिः पुण्यप्रदा | ३/३/७ |
| | =इयं तिथिः पुण्यप्रदासु तिथिसु प्रथमा | ३/३/७ |
| | =अस्याः व्रतम् द्विजेनावश्यं कर्तव्यम् | २६/४/५४ |
| | =अस्या व्रतमाहात्म्यम् | २७/१/१४ |
| | =अत्र अन्नं विण्मूत्रसमम्, तस्य भक्षणे दोष-कथनम् | २७/१/६ |
| | =अस्मिन् व्रते असमर्थः फलं मूलं जलं च पिबेत् इति | २७/१/१२ |
| | =अस्य व्रतनैव बैकुण्ठलाभः | २७/२/९४-९५ |
| | =अत्र शिम्बीभक्षणेन पुत्रनाशः | २७/१/३४ |
| | =इयं तिथिषु कृष्णरूपा | ७३/४/६१ |
| | =अस्य व्रतेन पापनिवृत्तिः | ७५/४/५५ |
| | =अस्यां भोजने पापभोजनम्, बालवृद्धातुराणां कृते अयं नियमो नास्ति | ७५/४/५६ |

## ऐ

| | | |
|---|---|---|
| **ऐक्षवम्** | =इदं ताम्रपत्रस्थं सुरातुल्यम् | २७/१/२३ |
| **ऐरावतः** | =अयं नागः, कद्रो अष्टमो पुत्रः द्र. महापद्म | ९/१/३९ |
| | =अयं हस्तिषु श्रेष्ठः | ३/३/१८ |
| | =अयं गजेन्द्रेषु कृष्णरूपः | ७३/४/६९ |
| | =इन्द्रवाहनमयम् | ८१/४/५ |
| **ऐश्वर्यम्** | =एषु महाज्ञानं श्रेष्ठम् | ७३/४/८६ |
| **ऐश्वर्याधिष्ठातृदेवी** | =इयं लक्ष्मीः | ३/१/६६ |
| **ॐकारः** | =अस्योच्चारणे विप्रादन्योनाधिकृतः अन्यस्माद्ग्रहणे धनहानिः | ८३/४/५२-५३ |

**ओ**

| | | |
|---|---|---|
| **ओषधिः** | =एषु दूर्वा श्रेष्ठा | ७३/४/८३ |

**औ**

| | | |
|---|---|---|
| **और्वः** | =ब्रह्मणः ऊरुद्भवः पुत्रः निर्वचनम् | २४/४/५ |
| | =कन्दली, अस्य जानूद्भवा कन्या | २४/४/६ |
| | =अयं कन्यायाः मृत्युं ज्ञात्वा दुर्वाससे पराभवशापो दत्तवान् | २५/४/१-१९ |
| **औषधिः** | =एषु रसायनं श्रेष्ठम् | ७३/४/९० |

**क**

| | | |
|---|---|---|
| **कंस** | =अयं देवक्याः वंशजभ्राता | ७/४/१४ |
| | =अयम,शरीरिणी वाक् श्रवणेन भयाक्रान्तः, तेन देवक्याः वधे प्रवृत्तः, वसुदेवेन शान्त्वनम् | ७/४/१५-३२ |
| | =अयं पूतनायाः भ्राता | १०/४/८-९ |
| | | ६४/४/२० |
| | =अशरीरिणीवाक् एनं हन्तुः नाम स्पष्टतया निर्देशयामास | १०/४/१-७ |
| | =अयं चन्द्रवंशीयः राजा | १४/४/१८ |
| | =अनेन दुःस्वप्ननिवेदनम्, सत्यकोऽस्य पुरोहितः | ६३/४/१-२९ |
| | =अस्य शत्रुः केवलं कृष्णः | ६४/४/२३ |

| | | |
|---|---|---|
| | =कृष्णानयनमस्वीकुर्वतो वसुदेवस्य अनेन वधप्रयास:, उग्रसेनेन रक्षा च | ६४/४/४२-४४ |
| | =अस्य वध:, कृष्णपादाब्जे प्रकाशपुंजरूपेण प्रवेशश्च | ७२/४/९४ |
| | =पातक:, विघ्न:, रोग:, शोक:, दानव: एते अस्य शब्दस्य अर्था: | १११/४/४४ |
| **कंसारि:** | =अस्यायं निर्वचनम् | १११/४/४४ |
| **किंसुक** | =अयं गृहे मंगलप्रद: | १०३/४/४१ |
| **क:** | =कृष्णपदघटक:, ककार: ब्रह्मवाचक: | १३/४/५६ |
| **ककार:** | =कृष्णपदे ककारोच्चारणेन यमकिंकरा: वेपन्ते | १३/४/६७ |
| **कच:** | =अयं वृहस्पते: पुत्र:, अस्य लक्षं शिष्या: | १०४/४/४५ |
| **कच्छप:** | =अयं शेषाधार: आधेयश्च वायो: | ६/४/२११ |
| | =अयं वाय्वाधार: अस्याधारश्च शेष: | ७३/४/१३ |
| | =सनत्कुमारेण समुद्रतटे दृष्ट:, अयं राघवेण नि:सारित: आसीत् | ८७/४/४७-४८ |
| **कज्जलम्** | =इदं भार्या: नेत्रयो: भूषणम् | ५३/४/२० |
| **कटुभाषिणी** | =इयं मृतं पतिं नानुगन्तुमर्हति अनुगमने पतिं न प्राप्नोति | २८/३/१२ |
| **कटूक्ति:** | =इयं स्त्रिया: पुण्यं नाशयति | २४/४/४१ |
| **कण्वशाखा** | =अत्र पिण्डादिदाने पुत्राणामिव शिष्यस्याप्यधिकार: कथित: | ६०/४/४ |
| | =सामवेदे अस्य पुण्यकाण्डे स्वप्नाध्याय: | ७७/४/२-३ |
| **कतिका** | =इयं केशसम्मार्जनी (कंघी) इति भाषायाम् | ४५/४/१६ |
| **कदम्ब:** | =अयं शिविरे शुभ: | १०३/४/५२ |
| **कदम्बमाला** | =इयं राधासखी, द्र. सुशीला, कुन्ती | ४/४/१८२ |
| | =इयं कदम्बवने लक्ष्मी: | ५६/४/८३ |
| | =इयं राधासखी | १२६/४/२६ |
| **कदलीवनम्** | =वृन्दावने स्थितमिदम्, अत्र सदा राधा तिष्ठति | ११०/४/१७ |

| | | |
|---|---|---|
| **कदली** | (द्र. कन्दली) | २४/४/८६ |
| **कद्रूः** | =इयं प्रकृतेः कला | १/२/१३० |
| | =इयं तपसा रोहिणीत्वं गता, इयं सर्वमाता | ९/४/१८ |
| | =अदित्याः शापेन रोहिणीरूपेणास्याः जन्म | ९/४/३५ |
| | =इयं अनन्तादि नागानां माता | ९/१/३८-४१ |
| **कन्दली** | =इयं दक्षकन्या, रुद्रस्य पत्नी | ९/१/१३ |
| | =कटूक्तिभाषणात् पत्युः दुर्वाससः शापेनेयं भस्मसादभूत् | २४/४/५५ |
| | =इयं पृथिव्यां कदलीत्वं गता | २४/४/८३ |
| | =इयं धरणीतले कदली इति नाम्ना प्रसिद्धः | २४/४/८६ |
| | =और्वस्य जानूद्भवा कन्या, इयं दुर्वाससं पतिं चकार | २४/४/६-११ |
| **कन्या** | =भगिन्यपि एतत्समा, | ७/४/३३ |
| | =ब्रह्मकन्यायाः पितृधर्षणजन्यक्लेशेन देहत्यागः, विष्णुना पुनरुज्जीवनम् | ३५/४/७४ |
| | =अस्याःपुत्रः, दौहित्रः | १०/३/१५७ |
| | द्र. जन्या | १०/१/१४६ |
| | =अस्याः संभोगः नीचकर्मः | ३५/४/५२ |
| | =ऋतुरात्रिषु अयुग्माहे सोमबुधशुक्रशनिवारेसु गर्भाधाने कन्यागर्भः, | ३६/२/१३२ |
| | =अस्याः दानं दशवापीसमा फलप्रदा | ४०/४/११६ |
| | =इयं अनुरूपाय वराय देया अन्यथा नरके वासः | ४१/४/५० |
| | =एनां स्वप्ने विप्रः यस्मै ददाति सः धनाढ्या भवति | ७७/४/६८ |
| | =स्वप्ने दृष्टा इयं कुटुम्बवृद्धिं श्रियं कीर्तिं च करोति | ७७/४/१९ |
| | =इयं सुपात्राय देया शुद्रतुल्यब्राह्मणाय तद्वंशजाय च न देया | ८३/४/६७ |

